श्रीगणेशायनमः ॥ समृद्धंसौभाग्यं
सकलवसुधायाः किमपितन्महैश्वर्यं
लीलाजनितजगतः खंडपरशोः ॥ श्रु
तीनां सर्वस्वंसुकृतमथमूर्त्तं सुमनसां
सुधासौंदर्यंतेसलिलमशिवंनः शमय
तु ॥ १ ॥ दरिद्राणांदैन्यंदुरितमथदुर्वा
सनहृदां द्रुतंदूरीकुर्वन्सकृदपिगतोह

गं०

॥ १ ॥

ष्टिसरणिम्॥ अपिद्राग्गाविद्याद्रुमदल
नदीक्षागुरुरिहप्रवाहस्तेवारां श्रियम
यमपारांदिशतुनः ।२। उदंचन्मार्तंड
स्फुटकपटहेरंबजननीकटाक्षव्याक्षेप
क्षणजनितसंक्षोभनिवहाः॥ भवंतुत्वं
गंतो हराशिरसिगंगातनुभुवस्तरंगाः
प्रोत्तुंगादुरितभयभंगायभवतां ॥ ३॥

ल०

॥ १ ॥

तवाऽऽलंबादंब स्फुरदलघुगर्वेण सह
सामयासर्वेऽवज्ञासरणिमथनीताः सु
रगणाः॥ इदानीमौदास्यं भजसियदि
भागीरथितदा निराधारो हारोदिमि
कथयकेषामिहपुरः॥४॥स्मृतिंयाता
पुंसामकृतसुकृतानामपिचया हरत्यं
तस्तंद्रांतिमिरमिवचंडांशुसरणिः॥इ

गं० यंसातेमूर्तिःसकलसुरसंसेव्यसलिला ५०

॥ २॥ ममांतःसंतापंत्रिविधमपिपापंचहर

तां॥५॥अपिप्राज्यंराज्यंतृणमिवपरि

त्यज्यसहसा विलोलद्वानीरंतवजन

नितीरंश्रितवतां॥सुधातःस्वादीयःस

लिलभरमातृप्तिपिबतां जनानामानं

दःपरिहसतिनिर्वाणपदवीं॥६प्रभाते ॥ २॥

स्नातीनां नृपतिरमणीनां कुचतटीग
तोयावन्मातार्मिलतितवतोयैर्मृगपद्ः
मृगास्तावद्वैमानिकशतसहस्रैःपरिवृ
ताविशंतिस्वच्छंदंविमलवपुषोनंदन
वनम् ॥ ७स्मृतंसद्यःस्वांतंविरचयाति
शांतंसकृदपिप्रगीतंयत्पापंझटितिभ
वतापंचहराति ॥ इदंतद्गंगेतिश्रवणरम

णीयंखलुपदं ममप्राणप्रांतर्वदनकम
लांतर्विलसतु८यदंतःखेलंतोबहुलतर
संतोषभरितानकाकानाकाधीश्वरन
गरसाकांक्षमनसः।निवासाल्लोकानां
जनिमरणशोकापहरणं तदेतत्तेतीरं
श्रमशमनधीरंभवतुनः९ नयत्साक्षा
द्वैदैरपिगलितभेदैरवसितं नयस्मिन्

जीवानांप्रसरातिमनावागेवसरः॥निरा
कारंनित्यंनिजमहिमनिर्वासिततमो
विशुद्धंयत्तत्त्वंसुरतटिनि तत्त्वंनविष
यः॥१०महादानैर्ध्यानैर्बहुविधिविता
नैरपिचयन्नलभ्यंघोराभिःसुविमलत
पोराशिभिरपि॥अचिंत्यंतद्विष्णोःपद
मखिलसाधारणतया ददाना केनासि

गं०

॥ ४ ॥

त्वमिहतुलनीयाकथयनः।११।नृणा
मीक्षामात्रादपि परिहरंत्याभवभयं
शिवायास्तेमूर्तैः कइहमहिमानं निग
दतु।अमर्षम्लानायाःपरममनुरोधंगि
रिभुवोविहायश्रीकंठः शिरसिनियतं
धारयतियां१२विनिंद्यान्युन्मत्तैरपि
च परिहार्याणि पतितैरवाच्यानिव्रा

लं०

॥४॥

त्यैःसपुलकमपास्यानिपिशुनैः ॥ हरं
तीलोकानामनवरतमेनांसि कियतां
कदाप्यश्रांतात्वं जगतिपुनरेकाविज
यसे ॥१३॥स्खलंतीस्वर्लोकादवनित
लशोकापह्नतये जटाजूटग्रंथौ यदसि
विनिबद्धापुरभिदा ॥ अयेनिर्लोभाना
मपिमनसिलोभं जनयतां गुणानामे

गं ॥ ५ ॥

वायंतवजननिदोषःपारिणतः॥ १४॥ लं०

जडानन्धान्पंगून्प्रकृतिबधिरानुक्ति-

विकलान् ग्रहग्रस्तानस्ताखिलदुरित

निस्तारसरणीन् ॥ निलिंपैर्निर्मुक्तान

पिचनिरयांतार्निपततोनरानंबत्रातुंत्व

मिहपरमंभेषजमसि १५ स्वभावस्व ॥ ५ ॥

च्छानां सहजशिशिराणामयमपाम

पारस्तेमातर्जयति महिमा कोपिजग
ति।मुदायंगायंतिद्युतलमनवद्यद्युति
भृतःसमासाद्याद्यापि स्फुटपुलकसां
द्राःसगरजाः॥१८ कृतक्षुद्रैनस्कानथ
झटितिसंतप्तमनसः समुद्धर्तुंसंतित्रि
भुवनतलेतीर्थनिवहाः॥अपिप्रायश्चि
त्तप्रसरणपथातीतचरितान् नरान्दू

गं०

॥ ६ ॥

रीकर्तुंत्वामिवजननित्वंविजयसे १७
निधानंधर्माणां किमपिच विधानंन
वसुदां प्रधानंतीर्थानाममलपरिधानं
त्रिजगतः॥ समाधानंबुद्धेरथखलुति
रोधानमाधियांश्रियामाधानंनःपरिह
रतुतापंतववपुः॥१८॥ पुरोधावंधावं
द्रविणमदिराघूर्णितदृशां महीपानां

ल०

॥ ६ ॥

नानातरुणतरखेदस्यनियतं ॥ममवौ
यंमंतु:स्वहितशतहंतुर्जडधियो वि
योगस्तेमातर्यदिहकरुणात: क्षणम
पि१९मरुल्लीलालोलल्लहरिलुलितां
भोजपटलीस्खलत्पांसुव्रातच्छुरण
विसरत्कौंकुमरुचि । सुरस्त्रीवक्षोजक्ष
रदगरुजंबालजटिलं जलंतेजंबालंम

गं० मजननजालंजरयतु।२०समुत्पत्तिः ल०
॥७॥ पद्मारमणपदपद्मामलनखान्निवासः
कंदर्पप्रतिभटजटाजूटभवने॥अथायं
व्यासंगोहतपतितानिस्तारणविधौ न
कस्मादुत्कर्षस्तवजननिजागर्तुंजग
तः॥२१॥नगेभ्योयांतीनांकथयतटि ॥७॥
नीनांकतमयापुराणांसंहर्तुः सुरधुनि

कपर्दीधिरूरुहे ॥ कयाचश्रीभर्तुःपद
कमलमक्षालिसलिलैस्तुलालेशोय
स्यांतवजननिदीयेतकविभिः ।२२।
विधत्तांनिःशंकंनिरवधिसमाधिं वि
धिरहो सुखंशेषेशेतांहरिरविरतंनृत्य
तुहरः ।कृतंप्रायश्चित्तैरलमथतपोदान
यजनैःसवित्रीकामानांयदि जगति

गं० जागर्ति भवती ॥ २३ ॥ अनाथःस्ने लं०
॥८॥ हार्द्रांविगलितगतिः पुण्यगतिदांपत
न्विश्वोद्धर्त्रींगदविगलितः सिद्धभिष
जं ॥सुधासिंधुंतृष्णाकुलितहृदयोमा
तरमयं शिशुः संप्राप्तस्त्वामहमिहवि
दध्याः समुचितम्॥२४। विलीनोवैवै ॥८॥
वस्वतनगरकोलाहलभरोगतादूतादू

रंकाचिदापिपतेरान्मृगयितुं॥ विमाना
नांब्रातोविदलयतिर्वीथीर्दिविषदां क
थातेकल्याणी यदवाधिमहीमंडलम
गात्॥ २५ ॥ स्फुरत्कामक्रोधप्रबलत
रसञ्जातजटिलज्वरज्वालाजालज्व
लितवपुषांनःप्रतिदिनं॥हरन्तांसन्ता
पंकमपि मरुदुल्लासलहरिछटाश्चंच

त्पाथःकणसरणयो दिव्यसरितः २६
इदंहिब्रह्मांडंसकलभुवनाभोगभवनं
तरंगैर्यस्यांतर्लुठतिपरितास्तिंदुकमि
व॥ सएषश्रीकंठप्रविततजटाजूटज
टिलो जलानांसंघातस्तवजननितापं
हरतुनः॥२७॥ तपंतेतीर्थानित्वरित
मिहयस्योद्धृतिविधौ करंकर्णेकुर्वंत्यं

पि किलकपालिप्रभृतयः ॥ इमं तं मामं
बत्वामियमनुकंपार्द्रहृदये पुनानास
वैषामघमथनदर्पं दलयसि ॥ २८ ॥
श्वपाकानां व्रातैरमितविचिकित्सा
विचलितैर्विमुक्तानामेकं किलसदन
मेनःपरिषदां ॥ अहोमामुद्धर्तुं जननि
घटयंत्याः परिकरं तवश्लाघां कर्तुंक

गं० थमिवसमर्थोनरपशुः ॥ २९ ॥ नको लं०
॥१०॥ ऽप्येतावंतं खलु समयमारभ्य मिलि
तो यदुद्धारादाराद्भवति जगतो विस्म
यभरः॥इतीमामीहांतेमनसिचिरका
लंस्थितवतीमयंसंप्राप्तोहंसफलयितु
मंवप्रणयनः ॥ ३० ॥ श्ववृत्तिव्यासं ॥१०॥
गो नियतमथ मिथ्या प्रलपनं कुतर्के

ष्वभ्यासः सततपरपैशून्यमननं ॥ अ
पिश्रावंश्रावं मम तु पुनरेवंगुणगणान्
तेत्वत्कोनामक्षणमपि निरीक्षेतवदन
म् ॥ ३१ ॥ विशालाभ्यामाभ्यां कि
मिह नयनाभ्यांखलुफलं नयाभ्यामा
लीढापरमरमणीयातवतनुः ॥ अयंहि
न्यक्कारोजननिमनुजस्यश्रवणयोर्य

गं०

योमर्तिर्यातस्तव लहरिलीलाकलक

॥११॥ लः ॥३२॥ विमानैः स्वच्छंदंसुरपुरम

यंतेसुकृतिनःपतंतिद्राकपापाज्जनानि

नरकांतःपरवशाः॥विभागोऽयंतस्मि

न्नशुभमयमूर्तौजनपदे नयत्रत्वंली

लादलितमनुजाशेषकलुषा ॥ ३३ ॥

अपिघ्नंतो विप्रानविरतमुशंतो गुरुस

ल०

॥११॥

ती: पिबंतोमैरयंपुनरापिहरंतश्चकनकं
॥ विहायत्वय्यंतेतनुमतनुदानाध्वर
जुषामुपर्यंबक्रीडंत्याखिलसुरसंभावि
तपदाः ॥ ३४ ॥ अलभ्यंसौरभ्यंहर
तिसततंयःसुमनसां क्षणादेवप्राणान
पिविरहशस्त्रक्षतभृतां॥त्वदीयानांली
लाचलितलहरीणांव्यतिकरात्पुनीते

गं० सोपिद्रागहहपवमानस्त्रिभुवनं॥ ३५। लं०
॥१२॥ कियंतः संत्येकेनियतमिहलोकार्थघ
टकाः परेपूतात्मानःकतिचपरलोकप्र
णयिनः ॥ सुखंशेते मातस्तव खलुकृ
पातःपुनरयं जगन्नाथः शश्वत्त्वयिनि
हितलोकद्वयभरः। ३६॥भवत्याहित्रा ॥१२॥
त्याधमपातितया खण्डपरिषत्परित्रा

णस्नेहः श्लथयितुमशक्यः खलु यथा

॥ ममाप्येवं प्रेमा दुरितनिवहेष्वंब जग

ति स्वभावोऽयं सैर्वैरपि खलु यतो दुष्प

रिहरः ॥ ३७॥ प्रदोषांतर्नृत्यत्पुरमथन

लीलोद्धृतजटातटाभोगप्रेंखल्लहरिभु

जसंतानविधुतिम् ॥ बिलक्रोडक्रीडज्ज

लडमरुटंकारसुभगास्तिरोधत्तां तापं

गं० त्रिदशतटिनीतांडवविधिः ॥ ३८ ॥स ल०
॥१३॥ दैवत्वय्ययेवार्पितकुशलचिंताभरामिमं
यदित्वंमामंबत्यजासिसमयेऽस्मिन्सु
विषमे ॥ तदाविश्वासोऽयंत्रिभुवनत
लादस्तमयतेनिराधाराचेयंभवतिख
लुनिर्व्याजकरुणा ॥ ३९ ॥कपर्दादुल्लु ॥१३॥
स्यप्रणयमिलदर्धांगयुवतेःपुरारेःप्रेंख

त्योर्मृदुलतरसीमंतसरणौ ॥ भवान्या
सापत्न्यस्फुरितनयनं कोमलरुचाक
रेणाक्षिप्तास्ते जननि विजयंतां लहर
यः ॥ ४० ॥ प्रपद्यंतेलोकाःकतिनभव
तीमत्रभवतीमुपाधिस्तत्रायं स्फुरति
यदभीष्टंवितरसि ॥ शपे तुभ्यंमातर्म
मतु पुनरात्मा सुरधुनि स्वभावादेव

गं० ||१४|| त्वय्यमितमनुरागं विधृतवान् ॥ ४१ ॥ ल० ||१४||

ललाटे यालोकैरिहखलु सलीलं तिल

कितातमोहंतुंधत्ते तरुणतरमार्तंडतु

लनाम्।विलुंपंतीसद्यो विधिलिखितदु

र्वर्णसरणिंत्वदीयासन्मृत्स्नामममहरतु

कृत्स्नामपिशुचं ॥ ४२ ॥ नरान्मूढां

स्तत्तज्जनपदसमासक्तमनसो हसंतः

सोल्लासं विकचकुसुमव्रातमिषतः ॥
पुनानाःसौरभ्यैः सततमलिनोनित्य
मलिनान्सखायोनःसंतुत्रिदशतटिनी
तीरतरवः ॥४३॥ जयंत्येकेदेवान्कठि
नतरसेवांस्तदपरे वितानव्यासक्ता य
मनियमरक्ताःकतिपये ॥ अहंतुत्वन्ना
मस्मरणकृतकामश्चिपथगे जगज्जा

गं०

लंजानेजननितृणजालेन सदृशं।४४।

॥१५॥ अविश्रांतंजन्मावधिसुकृतजन्मार्ज

नकृतां सतांश्रेयःकर्तुं कतिनकृतिनः

संतिविबुधाः॥ निरस्तालंबानामकृत

सुकृतानां तुभवतींविनाऽमुष्मिँल्लोके

नपरमवलोकेहितकरम्॥४५॥ पयः ॥१५॥

पीत्वामातस्तवसपदियातःसहचरैर्वि



ल०

मूढैःसंरंतुंक्काचिदपिनविश्रांतिमगमं॥
इदानीमुत्संगे मृदुपवनसंचारशिशिरे
चिरादुन्निद्रंमांसदयहृदयेशाययचिर
म्॥४६॥बधानद्रागेवद्रढिमरमणीयं
परिकरंकिरीटे बालेंदुं नियमयपुनः प
न्नगगणैः॥नकुर्यास्त्वंहेलामितरजन
साधारणतया जगन्नाथस्यायंसुरधु

निसमुद्धारसमयः॥ ४७॥ शरच्चंद्रश्वे
तां शशिशकलश्वेतालमुकुटां करैः कुं
भांभोजेवरभयानिरासौचदधतीम् ॥
सुधाधाराकाराभरणवसनांशुभ्रमकर
स्थितां त्वां ये ध्यायंत्युदयातिनतेषां
परिभवः॥ ४८॥ दरस्मितसमुल्लसद्व
दनकान्तिपूरामृतैर्भवज्वलनभर्जिता

ननिशमूर्जयंतीनरान् ॥चिदेकमयचं
द्रिकाचयचमत्कृतिंतन्वती तनोतुम
म शं तनोःसपदि शंतनोरंगना॥४९॥
मंत्रैर्मीलितमौषधैर्मुकुलितंत्रस्तंसुरा
णांगणैः स्रस्तं सांद्रसुधारसैर्विदलितं
गारुत्मतैर्ग्रावभिः॥ वीचीक्षालितका
लियाहितपदे स्वर्लोककल्लोलिनित्वं

गं० तापं तिरयाधुना ममभवज्वालावली ल०
॥१७॥ ढात्मनः।५०। द्यूतेनागेंद्रकृत्तिप्रमथ
गणमणिश्रेणिनंदींदुमुख्यंसर्वस्वंहार
यित्वा स्वमथपुरभिदि द्राक्पणीकर्त्तु
कामे ॥ साकूतंहैमवत्यामृदुलहसित
यावीक्षितायास्तवांऽब व्यालोलोल्ला
सिवल्गल्लहरिनटघटीतांडवंनः पुनातु ॥१७॥

॥ ५१ ॥ विभूषितानंगारिपुत्तमांगास
द्यः कृतानेकजनार्त्तिभंगा ॥ मनोहरो
त्तुंगचलत्तरंगा गंगा ममांऽगान्यम
लीकरोतु ॥५२॥ इमांपीयूषलहरींज
गन्नाथेनानिर्मिताम् ॥ यः पठेत्तस्यस
र्वत्रजायंतेसुखसंपदः ॥ ५३ ॥ इति
श्रीमज्जगन्नाथविरचिता गंगालहरी

गं० ॥१८॥

समाप्ता ॥ ॥ श्रीगंगार्पणमस्तु ॥

मुद्रितेयं गंगालहरी साधलेइत्युपाभिधशम्भुज-
नुर्गजाननशास्त्रिद्वारा संशोधयित्वा
पं० श्रीधरशिवलालशर्मणां ज्ञान-
सागराख्यमुद्रालयस्याधिकारिणा
संवत् १९५५ शके १८२०

---

"श्रीज्ञानसागर" छा० छा० ( बंबई. )

ल० ॥१८॥

